श्रीमाता श्रीमहाराज्ञी श्रीमत्सिम्हासनेश्वरी ।

चिदग्निकुंडसंभूता देवकार्यसमुद्यता ॥ 1 ॥

1. श्रीमाता
2. श्रीमहाराज्ञी
3. श्रीमत्सिम्हासनेश्वरी
4. चिदग्निकुंडसंभूता
5. देवकार्यसमुद्यता

उद्यत्भानुसहस्राभा चतुर्बाहुसमन्विता ।

रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥ 2 ॥

6. उद्यत्भानुसहस्राभा
7. चतुर्बाहुसमन्विता
8. रागस्वरूपपाशाढ्या
9. क्रोधाकाराङ्कुशोज्ज्वला

मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ।

निजारुणप्रभापूरमज्जत्ब्रह्माण्डमण्डला ॥ 3 ॥

10. मनोरूपेक्षुकोदण्डा
11. पञ्चतन्मात्रसायका
12. निजारुणप्रभापूरमज्जत्ब्रह्माण्डमण्डला

चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा ।

कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ॥ 4 ॥

13. चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा
14. कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता

अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता ।

मुखचन्द्रकलङ्काभमृगनाभिविशेषिका ॥ 5 ॥

15. अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता
16. मुखचन्द्रकलङ्काभमृगनाभिविशेषिका

वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका ।
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ॥ 6 ॥

17. वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका
18. वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना

नवचम्पकपुष्पाभनासादण्डविराजिता ।
ताराकान्तितिरस्कारिनासाभरणभासुरा ॥ 7 ॥

19. नवचम्पकपुष्पाभनासादण्डविराजिता
20. ताराकान्तितिरस्कारिनासाभरणभासुरा

कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा ।
ताटङ्कयुगलीभूततपनोडुपमण्डला ॥ 8 ॥

21. कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा
22. ताटङ्कयुगलीभूततपनोडुपमण्डला

पद्मरागशिलादर्शपरिभाविकपोलभूः ।
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥ 9 ॥

23. पद्मरागशिलादर्शपरिभाविकपोलभूः
24. नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा

शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला ।
कर्पूरवीटिकामोदसमाकर्षद्दिगन्तरा ॥ 10 ॥

25. शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला
26. कर्पूरवीटिकामोदसमाकर्षद्दिगन्तरा ।

निजसल्लापमाधुर्यविनिर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ॥ 11 ॥

27. निजसल्लापमाधुर्यविनिर्भर्त्सितकच्छपी
28. मन्दस्मितप्रभापूरमज्जत्कामेशमानसा

अनाकलितसादृश्यचुबुकश्रीविराजिता ।

कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥ 12 ॥

29. अनाकलितसादृश्यचुबुकश्रीविराजिता

30. कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा

कनकाङ्गदकेयूरकमनीयभुजान्विता ।

रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ॥ 13 ॥

31. कनकाङ्गदकेयूरकमनीयभुजान्विता

32. रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता

कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।

नाभ्यालवालरोमालिलताफलकुचद्वयी ॥ 14 ॥

33. कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी

34. नाभ्यालवालरोमालिलताफलकुचद्वयी

लक्ष्यरोमलताधारतासमुन्नेयमध्यमा ।

स्तनभारदलन्मध्यपट्टबन्धवलित्रया ॥ 15 ॥

35. लक्ष्यरोमलताधारतासमुन्नेयमध्यमा

36. स्तनभारदलन्मध्यपट्टबन्धवलित्रया

अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी ।

रत्नकिङ्किणिकारम्यरशनादामभूषिता ॥ 16 ॥

37. अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी

38. रत्नकिङ्किणिकारम्यरशनादामभूषिता

कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्विता ।

माणिक्यमकुटाकारजानुद्वयविराजिता ॥ 17 ॥

39. कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्विता

40. माणिक्यमकुटाकारजानुद्वयविराजिता

इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका ।

गूढगुल्फा कूर्मपृष्ठजयिष्णुप्रपदान्विता ॥ 18 ॥

41. इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका
42. गूढगुल्फा
43. कूर्मपृष्ठजयिष्णुप्रपदान्विता

नखदीधितिसञ्छन्ननमज्जनतमोगुणा ।
पदद्वयप्रभाजालपराकृतसरोरुहा ॥ 19 ॥

44. नखदीधितिसञ्छन्ननमज्जनतमोगुणा
45. पदद्वयप्रभाजालपराकृतसरोरुहा

शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्भुजा ।
मरालीमन्दगमना महालावण्यशेवधिः ॥ 20 ॥

46. शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्भुजा
47. मरालीमन्दगमना
48. महालावण्यशेवधिः

सर्वारुणाऽनवद्याङ्गी सर्वाभरणभूषिता ।
शिवकामेश्वराङ्कस्था शिवा स्वाधीनवल्लभा ॥ 21 ॥

49. सर्वारुणा
50. अनवद्याङ्गी
51. सर्वाभरणभूषिता
52. शिवकामेश्वराङ्कस्था
53. शिवा
54. स्वाधीनवल्लभा

सुमेरुशृङ्गमध्यस्था श्रीमन्नगरनायिका ।
चिन्तामणिगृहान्तस्था पञ्चब्रह्मासनस्थिता ॥ 22 ॥

55. सुमेरुशृङ्गमध्यस्था
56. श्रीमन्नगरनायिका
57. चिन्तामणिगृहान्तस्था
58. पञ्चब्रह्मासनस्थिता

महापद्माटवीसंस्था कदम्बवनवासिनी ।

सुधासागरमध्यस्था कामाक्षी कामदायिनी ॥ 23 ॥

59. महापद्माटवीसंस्था
60. कदंबवनवासिनी
61. सुधासागरमध्यस्था
62. कामाक्षी
63. कामदायिनी

देवर्षिगणसङ्घातस्तूयमानात्मवैभवा ।

भण्डासुरवधोद्युक्तशक्तिसेनासमन्विता ॥ 24 ॥

64. देवर्षिगणसङ्घातस्तूयमानात्मवैभवा
65. भण्डासुरवधोद्युक्तशक्तिसेनासमन्विता

सम्पत्करीसमारूढसिन्धुरव्रजसेविता ।

अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ॥ 25 ॥

66. सम्पत्करीसमारूढसिन्धुरव्रजसेविता
67. अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता

चक्रराजरथारूढसर्वायुधपरिष्कृता ।

गेयचक्ररथारूढमन्त्रिणीपरिसेविता ॥ 26 ॥

68. चक्रराजरथारूढसर्वायुधपरिष्कृता
69. गेयचक्ररथारूढमन्त्रिणीपरिसेविता

किरिचक्ररथारूढदण्डनाथापुरस्कृता ।

ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ॥ 27 ॥

70. किरिचक्ररथारूढदण्डनाथापुरस्कृता
71. ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा

भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता ।

नित्यापराक्रमाटोपनिरीक्षणसमुत्सुका ॥ 28 ॥

72. भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता

73. नित्यापराक्रमाटोपनिरीक्षणसमुत्सुका

भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता ।
मन्त्रिण्यम्बाविरचितविशुक्रवधतोषिता ॥ 29 ॥

74. भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता
75. मन्त्रिण्यम्बाविरचितविशुक्रवधतोषिता

विषङ्गप्राणहरणवाराहीवीर्यनन्दिता ।
कामेश्वरमुखालोककल्पितश्रीगणेश्वरा ॥ 30 ॥

76. विषङ्गप्राणहरणवाराहीवीर्यनन्दिता
77. कामेश्वरमुखालोककल्पितश्रीगणेश्वरा

महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता ।
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ॥ 31 ॥

78. महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता
79. भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी

कराङ्गुलिनखोत्पन्ननारायणदशाकृतिः ।
महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका ॥ 32 ॥

80. कराङ्गुलिनखोत्पन्ननारायणदशाकृतिः
81. महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका

कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यका ।
ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवा ॥ 33 ॥

82. कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यका
83. ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवा

हरनेत्राग्निसंदग्धकामसंजीवनौषधिः ।
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ॥ 34 ॥

84. हरनेत्राग्निसंदग्धकामसंजीवनौषधिः
85. श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा

कण्ठाधःकटिपर्यन्तमध्यकूटस्वरुपिणी ।

शक्तिकूटैकतापन्नकट्यधोभागधारिणी ॥ 35 ॥

86. कण्ठाधःकटिपर्यन्तमध्यकूटस्वरुपिणी

87. शक्तिकूटैकतापन्नकट्यधोभागधारिणी

मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा ।

कुलामृतैकरसिका कुलसंकेतपालिनी ॥ 36 ॥

88. मूलमन्त्रात्मिका

89. मूलकूटत्रयकलेवरा

90. कुलामृतैकरसिका

91. कुलसंकेतपालिनी

कुलाङ्गना कुलान्तस्था कौलिनी कुलयोगिनी ।

अकुला समयान्तस्था समयाचारतत्परा ॥ 37 ॥

92. कुलाङ्गना

93. कुलान्तस्था

94. कौलिनी

95. कुलयोगिनी

96. अकुला

97. समयान्तस्था

98. समयाचारतत्परा

मूलाधारैकनिलया ब्रह्मग्रन्थिविभेदिनी ।

मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ॥ 38 ॥

99. मूलाधारैकनिलया

100. ब्रह्मग्रन्थिविभेदिनी

101. मणिपूरान्तरुदिता

102. विष्णुग्रन्थिविभेदिनी

आज्ञाचक्रान्तरालस्था रुद्रग्रन्थिविभेदिनी ।

सहस्राराम्बुजारूढा सुधासाराभिवर्षिणी ॥ 39 ॥

103. आज्ञाचक्रान्तरालस्था
104. रुद्रग्रन्थिविभेदिनी
105. सहस्राराम्बुजारूढा
106. सुधासाराभिवर्षिणी

तटिल्लतासमरुचिः षट्चक्रोपरिसंस्थिता ।
महासक्तिः कुण्डलिनी बिसतन्तुतनीयसी ॥ 40 ॥

107. तटिल्लतासमरुचिः
108. षट्चक्रोपरिसंस्थिता
109. महासक्तिः
110. कुण्डलिनी
111. बिसतन्तुतनीयसी

भवानी भावनागम्या भवारण्यकुठारिका ।
भद्रप्रिया भद्रमूर्तिः भक्तसौभाग्यदायिनी ॥ 41 ॥

112. भवानी
113. भावनागम्या
114. भवारण्यकुठारिका
115. भद्रप्रिया
116. भद्रमूर्तिः
117. भक्तसौभाग्यदायिनी

भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा ।
शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी ॥ 42 ॥

118. भक्तिप्रिया
119. भक्तिगम्या
120. भक्तिवश्या
121. भयापहा
122. शाम्भवी
123. शारदाराध्या
124. शर्वाणी

125. शर्मदायिनी

शाङ्करी श्रीकरी साध्वी शरच्चन्द्रनिभानना ।
शातोदरी शान्तिमती निराधारा निरञ्जना ॥ 43 ॥

126. शाङ्करी
127. श्रीकरी
128. साध्वी
129. शरच्चन्द्रनिभानना
130. शातोदरी
131. शान्तिमती
132. निराधारा
133. निरञ्जना

निर्लेपा निर्मला नित्या निराकारा निराकुला ।
निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा ॥ 44 ॥

134. निर्लेपा
135. निर्मला
136. नित्या
137. निराकारा
138. निराकुला
139. निर्गुणा
140. निष्कला
141. शान्ता
142. निष्कामा
143. निरुपप्लवा

नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया ।
नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा ॥ 45 ॥

144. नित्यमुक्ता
145. निर्विकारा
146. निष्प्रपञ्चा

147. निराश्रया
148. नित्यशुद्धा
149. नित्यबुद्धा
150. निरवद्या
151. निरन्तरा

निष्कारणा निष्कळंका निरुपाधिः निरीश्वरा ।
नीरागा रागमथनी निर्मदा मदनाशिनी ॥ 46 ॥

152. निष्कारणा
153. निष्कलङ्का
154. निरुपाधिः
155. निरीश्वरा
156. नीरागा
157. रागमथनी
158. निर्मदा
159. मदनाशिनी

निश्चिन्ता निरहङ्कारा निर्मोहा मोहनाशिनी ।
निर्मम ममताहन्त्री निष्पापा पापनाशिनी ॥ 47 ॥

160. निश्चिन्ता
161. निरहङ्कारा
162. निर्मोहा
163. मोहनाशिनी
164. निर्मम
165. ममताहन्त्री
166. निष्पापा
167. पापनाशिनी

निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी ।
निस्संशया संशयघ्नी निर्भवा भवनाशिनी ॥ 48 ॥

168. निष्क्रोधा

169. क्रोधशमनी
170. निर्लोभा
171. लोभनाशिनी
172. निस्संशया
173. संशयघ्नी
174. निर्भवा
175. भवनाशिनी

निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी ।
निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा ॥ 49 ॥

176. निर्विकल्पा
177. निराबाधा
178. निर्भेदा
179. भेदनाशिनी
180. निर्नाशा
181. मृत्युमथनी
182. निष्क्रिया
183. निष्परिग्रहा

निस्तुला नीलचिकुरा निरपाया निरत्यया ।
दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ॥ 50 ॥

184. निस्तुला
185. नीलचिकुरा
186. निरपाया
187. निरत्यया
188. दुर्लभा
189. दुर्गमा
190. दुर्गा
191. दुःखहन्त्री
192. सुखप्रदा

दुष्टदूरा दुराचारशमनी दोषवर्जिता ।

सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ॥ 51 ॥

193. दुष्टदूरा

194. दुराचारशमनी

195. दोषवर्जिता

196. सर्वज्ञा

197. सान्द्रकरुणा

198. समानाधिकवर्जिता

सर्वशक्तिमयी सर्वमङ्गला सद्गतिप्रदा ।

सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ॥ 52 ॥

199. सर्वशक्तिमयी

200. सर्वमङ्गला

201. सद्गतिप्रदा

202. सर्वेश्वरी

203. सर्वमयी

204. सर्वमन्त्रस्वरूपिणी

सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मनी ।

माहेश्वरी महादेवी महालक्ष्मी मृडप्रिया ॥ 53 ॥

205. सर्वयन्त्रात्मिका

206. सर्वतन्त्ररूपा

207. मनोन्मनी

208. माहेश्वरी

209. महादेवी

210. महालक्ष्मी

211. मृडप्रिया

महारूपा महापूज्या महापातकनाशिनी ।

महामाया माहासत्त्वा माहाशक्तिर्महारतिः ॥ 54 ॥

212. महारूपा

213. महापूज्या
214. महापातकनाशिनी
215. महामाया
216. माहासत्त्वा
217. माहाशक्तिः
218. महारतिः

महाभोगा महैश्वर्या महावीर्या महाबला ।
महाबुद्धिः महासिद्धिः महायोगेश्वरेश्वरी ॥ 55 ॥

219. महाभोगा
220. महैश्वर्या
221. महावीर्या
222. महाबला
223. महाबुद्धिः
224. महासिद्धिः
225. महायोगेश्वरेश्वरी

महातन्त्रा महामन्त्रा महायन्त्रा महासना ।
महायागक्रमाराध्या महाभैरवपूजिता ॥ 56 ॥

226. महातन्त्रा
227. महामन्त्रा
228. महायन्त्रा
229. महासना
230. महायागक्रमाराध्या
231. महाभैरवपूजिता

महेश्वरमहाकल्पमहाताण्डवसाक्षिणी ।
महाकामेशमहिषी महात्रिपुरसुन्दरी ॥ 57 ॥

232. महेश्वरमहाकल्पमहाताण्डवसाक्षिणी
233. महाकामेशमहिषी
234. महात्रिपुरसुन्दरी

चतुष्षष्ट्युपचाराढ्या चतुष्षष्टिकलामयी ।

महाचतुष्षष्टिकोटियोगिनीगणसेविता ॥ 58 ॥

235. चतुष्षष्ट्युपचाराढ्या
236. चतुष्षष्टिकलामयी
237. महाचतुष्षष्टिकोटियोगिनीगणसेविता

मनुविद्या चन्द्रविद्या चन्द्रमण्डलमध्यगा ।

चारुरूपा चारुहासा चारुचन्द्रकलाधरा ॥ 59 ॥

238. मनुविद्या
239. चन्द्रविद्या
240. चन्द्रमण्डलमध्यगा
241. चारुरूपा
242. चारुहासा
243. चारुचन्द्रकलाधरा

चराचरजगन्नाथा चक्रराजनिकेतना ।

पार्वती पद्मनयना पद्मरागसमप्रभा ॥ 60 ॥

244. चराचरजगन्नाथा
245. चक्रराजनिकेतना
246. पार्वती
247. पद्मनयना
248. पद्मरागसमप्रभा

पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।

चिन्मयी परमानन्दा विज्ञानघनरूपिणी ॥ 61 ॥

249. पञ्चप्रेतासनासीना
250. पञ्चब्रह्मस्वरूपिणी
251. चिन्मयी
252. परमानन्दा
253. विज्ञानघनरूपिणी

ध्यानध्यातृध्येयरूपा धर्माधर्मविवर्जिता ।
विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ॥ 62 ॥

254. ध्यानध्यातृध्येयरूपा
255. धर्माधर्मविवर्जिता
256. विश्वरूपा
257. जागरिणी
258. स्वपन्ती
259. तैजसात्मिका

सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्थाविवर्जिता ।
सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ॥ 63 ॥

260. सुप्ता
261. प्राज्ञात्मिका
262. तुर्या
263. सर्वावस्थाविवर्जिता
264. सृष्टिकर्त्री
265. ब्रह्मरूपा
266. गोप्त्री
267. गोविन्दरूपिणी

संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ।
सदाशिवानुग्रहदा पञ्चकृत्यपरायणा ॥ 64 ॥

268. संहारिणी
269. रुद्ररूपा
270. तिरोधानकरी
271. ईश्वरी
272. सदाशिवा
273. अनुग्रहदा
274. पञ्चकृत्यपरायणा

भानुमण्डलमध्यस्था भैरवी भगमालिनी ।

पद्मासना भगवती पद्मनाभसहोदरी ॥ 65 ॥

275. भानुमण्डलमध्यस्था
276. भैरवी
277. भगमालिनी
278. पद्मासना
279. भगवती
280. पद्मनाभसहोदरी

उन्मेषनिमिषोत्पन्नविपन्नभुवनावलिः ।

सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ॥ 66 ॥

281. उन्मेषनिमिषोत्पन्नविपन्नभुवनावलिः
282. सहस्रशीर्षवदना
283. सहस्राक्षी
284. सहस्रपात्

आब्रह्मकीटजननी वर्णाश्रमविधायिनी ।

निजाज्ञारूपनिगमा पुण्यापुण्यफलप्रदा ॥ 67 ॥

285. आब्रह्मकीटजननी
286. वर्णाश्रमविधायिनी
287. निजाज्ञारूपनिगमा
288. पुण्यापुण्यफलप्रदा

शृतिसीमन्तसिन्धूरीकृतपादाब्जधूलिका ।

सकलागमसंदोहशुक्तिसंपुटमौक्तिका ॥ 68 ॥

289. शृतिसीमन्तसिंधूरीकृतपादाब्जधूलिका
290. सकलागमसंदोहशुक्तिसंपुटमौक्तिका

पुरुषार्थप्रदा पूर्णा भोगिनी भुवनेश्वरी ।

अम्बिका अनादिनिधना हरिब्रह्मेन्द्रसेविता ॥ 69 ॥

291. पुरुषार्थप्रदा
292. पूर्णा

293. भोगिनी
294. भुवनेश्वरी
295. अम्बिका
296. अनादिनिधना
297. हरिब्रह्मेन्द्रसेविता

नारायणी नादरूपा नामरूपविवर्जिता ।
ह्रींकारी ह्रीमती हृद्या हेयोपाधेयवर्जिता ॥ 70 ॥

298. नारायणी
299. नादरूपा
300. नामरूपविवर्जिता
301. ह्रींकारी
302. ह्रीमती
303. हृद्या
304. हेयोपाधेयवर्जिता

राजराजार्चिता राज्ञी रम्या राजीवलोचना ।
रञ्जनी रमणी रस्या रणत्किङ्किणिमेखला ॥ 71 ॥

305. राजराजार्चिता
306. राज्ञी
307. रम्या
308. राजीवलोचना
309. रञ्जनी
310. रमणी
311. रस्या
312. रणत्किङ्किणिमेखला

रमा राकेन्दुवदना रतिरूपा रतिप्रिया ।
रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ॥ 72 ॥

313. रमा
314. राकेन्दुवदना

315. रतिरूपा

316. रतिप्रिया

317. रक्षाकरी

318. राक्षसघ्नी

319. रामा

320. रमणलम्पटा

काम्या कामकलारूपा कदम्बकुसुमप्रिया ।

कल्याणी जगतीकन्दा करुणारससागरा ॥ 73 ॥

321. काम्या

322. कामकलारूपा

323. कदम्बकुसुमप्रिया

324. कल्याणी

325. जगतीकन्दा

326. करुणारससागरा

कलावती कलालापा कान्ता कादम्बरिप्रिया ।

वरदा वामनयना वारुणीमदविह्वला ॥ 74 ॥

327. कलावती

328. कलालापा

329. कान्ता

330. कादम्बरिप्रिया

331. वरदा

332. वामनयना

333. वारुणीमदविह्वला

विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी ।

विधात्री वेदजननी विष्णुमाया विलासिनी ॥ 75 ॥

334. विश्वाधिका

335. वेदवेद्या

336. विन्ध्याचलनिवासिनी

337. विधात्री

338. वेदजननी

339. विष्णुमाया

340. विलासिनी

क्षेत्रस्वरूपा क्षेत्रेशी क्षेत्रक्षेत्रज्ञपालिनी ।

क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ॥ 76 ॥

341. क्षेत्रस्वरूपा

342. क्षेत्रेशी

343. क्षेत्रक्षेत्रज्ञपालिनी

344. क्षयवृद्धिविनिर्मुक्ता

345. क्षेत्रपालसमर्चिता

विजया विमला वन्द्या वन्दारुजनवत्सला ।

वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ॥ 77 ॥

346. विजया

347. विमला

348. वन्द्या

349. वन्दारुजनवत्सला

350. वाग्वादिनी

351. वामकेशी

352. वह्निमण्डलवासिनी

भक्तिमत्कल्पलतिका पशुपाशविमोचनी ।

संहृताशेषपाषण्डा सदाचारप्रवर्तिका ॥ 78 ॥

353. भक्तिमत्कल्पलतिका

354. पशुपाशविमोचनी

355. संहृताशेषपाषण्डा

356. सदाचारप्रवर्तिका

तापत्रयाग्निसंतप्तसमाह्लादनचंद्रिका ।

तरुणी तापसाराध्या तनुमध्या तमोपहा ॥ 79 ॥

357. तापत्रयाग्निसंतप्तसमाह्लादनचन्द्रिका
358. तरुणी
359. तापसाराध्या
360. तनुमध्या
361. तमोपहा

चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी ।

स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ॥ 80 ॥

362. चितिः
363. तत्पदलक्ष्यार्था
364. चिदेकरसरूपिणी
365. स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः

परा प्रत्यक्चितीरूपा पश्यन्ती परदेवता ।

मध्यमा वैखरीरूपा भक्तमानसहंसिका ॥ 81 ॥

366. परा
367. प्रत्यक्चितीरूपा
368. पश्यन्ती
369. परदेवता
370. मध्यमा
371. वैखरीरूपा
372. भक्तमानसहंसिका

कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता ।

शृङ्गाररससंपूर्णा जया जालन्धरस्थिता ॥ 82 ॥

373. कामेश्वरप्राणनाडी
374. कृतज्ञा
375. कामपूजिता
376. शृङ्गाररससंपूर्णा
377. जया

378. जालन्धरस्थिता

ओड्याणपीठनिलया बिन्दुमण्डलवासिनी ।

रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥ 83 ॥

379. ओड्याणपीठनिलया

380. बिन्दुमण्डलवासिनी

381. रहोयागक्रमाराध्या

382. रहस्तर्पणतर्पिता

सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।

षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ॥ 84 ॥

383. सद्यःप्रसादिनी

384. विश्वसाक्षिणी

385. साक्षिवर्जिता

386. षडङ्गदेवतायुक्ता

387. षाड्गुण्यपरिपूरिता

नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी ।

नित्या षोडशिकारूपा श्रीकण्ठार्थशरीरिणी ॥ 85 ॥

388. नित्यक्लिन्ना

389. निरुपमा

390. निर्वाणसुखदायिनी

391. नित्या

392. षोडशिकारूपा

393. श्रीकण्ठार्थशरीरिणी

प्रभावती प्रभारूपा प्रसिद्धा परमेश्वरी ।

मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ॥ 86 ॥

394. प्रभावती

395. प्रभारूपा

396. प्रसिद्धा

397. परमेश्वरी

398. मूलप्रकृतिः

399. अव्यक्ता

400. व्यक्ताव्यक्तस्वरूपिणी

व्यापिनी विविधाकारा विद्याविद्यास्वरूपिणी ।

महाकामेशनयनकुमुदाह्लादकौमुदी ॥ 87 ॥

401. व्यापिनी

402. विविधाकारा

403. विद्याविद्यास्वरूपिणी

404. महाकामेशनयनकुमुदाह्लादकौमुदी

भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः ।

शिवदूती शिवाराध्या शिवमूर्तिः शिवङ्करी ॥ 88 ॥

405. भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः

406. शिवदूती

407. शिवाराध्या

408. शिवमूर्तिः

409. शिवङ्करी

शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।

अप्रमेया स्वप्रकाशा मनोवाचामगोचरा ॥ 89 ॥

410. शिवप्रिया

411. शिवपरा

412. शिष्टेष्टा

413. शिष्टपूजिता

414. अप्रमेया

415. स्वप्रकाशा

416. मनोवाचामगोचरा

चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका ।

गायत्री व्याहृतिस्सन्ध्या द्विजबृन्दनिषेविता ॥ 90 ॥

417. चिच्छक्तिः
418. चेतनारूपा
419. जडशक्तिः
420. जडात्मिका
421. गायत्री
422. व्याहृतिः
423. सन्ध्या
424. द्विजबृन्दनिषेविता

तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता ।
निस्सीममहिमा नित्ययौवना मदशालिनी ॥ 91 ॥

425. तत्त्वासना
426. तत्त्वमयी
427. पञ्चकोशान्तरस्थिता
428. निस्सीममहिमा
429. नित्ययौवना
430. मदशालिनी

मदघूर्णितरक्ताक्षी मदपाटलगण्डभूः ।
चन्दनद्रवदिग्धाङ्गी चाम्पेयकुसुमप्रिया ॥ 92 ॥

431. मदघूर्णितरक्ताक्षी
432. मदपाटलगण्डभूः
433. चन्दनद्रवदिग्धाङ्गी
434. चाम्पेयकुसुमप्रिया

कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी ।
कुलकुण्डालया कौलमार्गतत्परसेविता ॥ 93 ॥

435. कुशला
436. कोमलाकारा
437. कुरुकुल्ला

438. कुलेश्वरी

439. कुलकुण्डालया

440. कौलमार्गतत्परसेविता

कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः ।

शांतिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥ 94 ॥

441. कुमारगणनाथाम्बा

442. तुष्टिः

443. पुष्टिः

444. मतिः

445. धृतिः

446. शान्तिः

447. स्वस्तिमती

448. कान्तिः

449. नन्दिनी

450. विघ्ननाशिनी

तेजोवती त्रिनयना लोलाक्षी कामरूपिणी ।

मालिनी हंसिनी माता मलयाचलवासिनी ॥ 95 ॥

451. तेजोवती

452. त्रिनयना

453. लोलाक्षी

454. कामरूपिणी

455. मालिनी

456. हंसिनी

457. माता

458. मलयाचलवासिनी

सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका ।

कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥ 96 ॥

459. सुमुखी

460. नलिनी
461. सुभ्रूः
462. शोभना
463. सुरनायिका
464. कालकण्ठी
465. कान्तिमती
466. क्षोभिणी
467. सूक्ष्मरूपिणी

वज्रेश्वरी वामदेवी वयोवस्थाविवर्जिता ।

सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥ 97 ॥

468. वज्रेश्वरी
469. वामदेवी
470. वयोवस्थाविवर्जिता
471. सिद्धेश्वरी
472. सिद्धविद्या
473. सिद्धमाता
474. यशस्विनी

विशुद्धिचक्रनिलया रक्तवर्णा त्रिलोचना ।

खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥ 98 ॥

475. विशुद्धिचक्रनिलया
476. रक्तवर्णा
477. त्रिलोचना
478. खट्वाङ्गादिप्रहरणा
479. वदनैकसमन्विता

पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी ।

अमृतादिमहाशक्तिसंवृता ढाकिनीश्वरी ॥ 99 ॥

480. पायसान्नप्रिया
481. त्वक्स्था

482. पशुलोकभयङ्करी

483. अमृतादिमहाशक्तिसंवृता।

484. ढाकिनीश्वरी

अनाहताब्जनिलया श्यामाभा वदनद्वया।

दंष्ट्रोज्ज्वलाऽक्षमालादिधरा रुधिरसंस्थिता ॥ 100 ॥

485. अनाहताब्जनिलया

486. श्यामाभा

487. वदनद्वया

488. दंष्ट्रोज्ज्वला

489. अक्षमालादिधरा

490. रुधिरसंस्थिता

कालरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया।

महावीरेन्द्रवरदा राकिण्यम्बास्वरूपिणी ॥ 101 ॥

491. कालरात्र्यादिशक्त्यौघवृता

492. स्निग्धौदनप्रिया

493. महावीरेन्द्रवरदा

494. राकिण्यम्बास्वरूपिणी

मणिपूराब्जनिलया वदनत्रयसंयुता।

वज्रादिकायुधोपेता ढामर्यादिभिरावृता ॥ 102 ॥

495. मणिपूराब्जनिलया

496. वदनत्रयसंयुता

497. वज्रादिकायुधोपेता

498. ढामर्यादिभिरावृता

रक्तवर्णा मांसनिष्ठा गुडान्नप्रीतमानसा।

समस्तभक्तसुखदा लाकिण्यम्बास्वरूपिणी ॥ 103 ॥

499. रक्तवर्णा

500. मांसनिष्ठा

501. गुडान्नप्रीतमानसा

502. समस्तभक्तसुखदा

503. लाकिण्यम्बास्वरूपिणी

स्वाधिस्थानाम्बुजगता चतुर्वक्त्रमनोहरा ।

शूलाद्यायुधसंपन्ना पीतवर्णाऽतिगर्विता ॥ 104 ॥

504. स्वाधिस्थानाम्बुजगता

505. चतुर्वक्त्रमनोहरा

506. शूलाद्यायुधसंपन्ना

507. पीतवर्णा

508. अतिगर्विता

मेथोनिष्ठा मधुप्रीता बन्धिन्यादिसमन्विता ।

दध्यन्नासक्तहृदया काकिनीरूपधारिणी ॥ 105 ॥

509. मेथोनिष्ठा

510. मधुप्रीता

511. बन्धिन्यादिसमन्विता

512. दध्यन्नासक्तहृदया

513. काकिनीरूपधारिणी

मूलाधाराम्बुजारूढा पञ्चवक्त्राऽस्थिसंस्थिता ।

अङ्कुशादिप्रहरणा वरदादिनिषेविता ॥ 106 ॥

514. मूलाधाराम्बुजारूढा

515. पञ्चवक्त्रा

516. अस्थिसंस्थिता

517. अङ्कुशादिप्रहरणा

518. वरदादिनिषेविता

मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी ।

आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ॥ 107 ॥

519. मुद्गौदनासक्तचित्ता

520. साकिन्यम्बास्वरूपिणी

521. आज्ञाचक्राब्जनिलया

522. शुक्लवर्णा

523. षडानना

मज्जासंस्था हंसवतीमुख्यशक्तिसमन्विता ।

हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ॥ 108 ॥

524. मज्जासंस्था

525. हंसवतीमुख्यशक्तिसमन्विता

526. हरिद्रान्नैकरसिका

527. हाकिनीरूपधारिणी

सहस्रदलपद्मस्था सर्ववर्णोपशोभिता ।

सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी ॥ 109 ॥

528. सहस्रदलपद्मस्था

529. सर्ववर्णोपशोभिता

530. सर्वायुधधरा

531. शुक्लसंस्थिता

532. सर्वतोमुखी

सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी ।

स्वाहा स्वधा मतिर्मेधा शृतिः स्मृतिरनुत्तमा ॥ 110 ॥

533. सर्वौदनप्रीतचित्ता

534. याकिन्यम्बास्वरूपिणी

535. स्वाहा

536. स्वधा

537. मतिः

538. मेधा

539. शृतिः

540. स्मृतिः

541. अनुत्तमा

पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना ।

पुलोमजार्चिता बन्धमोचनी बन्धुरालका ॥ 111 ॥

542. पुण्यकीर्तिः
543. पुण्यलभ्या
544. पुण्यश्रवणकीर्तना
545. पुलोमजार्चिता
546. बन्धमोचनी
547. बन्धुरालका

विमर्शरूपिणी विद्या वियदादिजगत्प्रसूः ।

सर्वव्याधिप्रशमनी सर्वमृत्युनिवारिणी ॥ 112 ॥

548. विमर्शरूपिणी
549. विद्या
550. वियदादिजगत्प्रसूः
551. सर्वव्याधिप्रशमनी
552. सर्वमृत्युनिवारिणी

अग्रगण्याऽचिन्त्यरूपा कलिकल्मषनाशिनी ।

कात्यायिनी कालहन्त्री कमलाक्षनिषेविता ॥ 113 ॥

553. अग्रगण्या
554. अचिन्त्यरूपा
555. कलिकल्मषनाशिनी
556. कात्यायिनी
557. कालहन्त्री
558. कमलाक्षनिषेविता

ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा ।

मृगाक्षी मोहिनी मुख्या मृडानी मित्ररूपिणी ॥ 114 ॥

559. ताम्बूलपूरितमुखी
560. दाडिमीकुसुमप्रभा
561. मृगाक्षी

562. मोहिनी
563. मुख्या
564. मृडानी
565. मित्ररूपिणी

नित्यतृप्ता भक्तनिधिः नियन्त्री निखिलेश्वरी ।
मैत्र्यादिवासनालभ्या महाप्रलयसाक्षिणी ॥ 115 ॥

566. नित्यतृप्ता
567. भक्तनिधिः
568. नियन्त्री
569. निखिलेश्वरी
570. मैत्र्यादिवासनालभ्या
571. महाप्रलयसाक्षिणी

पराशक्तिः परानिष्ठा प्रज्ञानघनरूपिणी ।
माध्वीपानालसा मत्ता मातृकावर्णरूपिणी ॥ 116 ॥

572. पराशक्तिः
573. परानिष्ठा
574. प्रज्ञानघनरूपिणी
575. माध्वीपानालसा
576. मत्ता
577. मातृकावर्णरूपिणी

महाकैलासनिलया मृणालमृदुदोर्लता ।
महनीया दयामूर्तिर्महासाम्राज्यशालिनी ॥ 117 ॥

578. महाकैलासनिलया
579. मृणालमृदुदोर्लता
580. महनीया
581. दयामूर्तिः
582. महासाम्राज्यशालिनी

आत्मविद्या महाविद्या श्रीविद्या कामसेविता ।

श्रीषोडशाक्षरी विद्या त्रिकूटा कामकोटिका ॥ 118 ॥

583. आत्मविद्या

584. महाविद्या

585. श्रीविद्या

586. कामसेविता

587. श्रीषोडशाक्षरी

588. विद्या

589. त्रिकूटा

590. कामकोटिका

कटाक्षकिङ्करीभूतकमलाकोटिसेविता ।

शिरःस्थिता चन्द्रनिभा फालस्थेन्द्रधनुःप्रभा ॥ 119 ॥

591. कटाक्षकिंकरीभूतकमलाकोटिसेविता

592. शिरःस्थिता

593. चन्द्रनिभा

594. फालस्था

595. इन्द्रधनुःप्रभा

हृदयस्था रविप्रख्या त्रिकोणान्तरदीपिका ।

दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥ 120 ॥

596. हृदयस्था

597. रविप्रख्या

598. त्रिकोणान्तरदीपिका

599. दाक्षायणी

600. दैत्यहन्त्री

601. दक्षयज्ञविनाशिनी

दरान्दोलितदीर्घाक्षी दरहासोज्ज्वलन्मुखी ।

गुरुमूर्तिर्गुणनिधिर्गोमाता गुहजन्मभूः ॥ 121 ॥

602. दरान्दोलितदीर्घाक्षी

603. दरहासोज्ज्वलन्मुखी

604. गुरुमूर्तिः

605. गुणनिधिः

606. गोमाता

607. गुहजन्मभूः

देवेशी दण्डनीतिस्था दहराकाशरूपिणी ।

प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता ॥ 122 ॥

608. देवेशी

609. दण्डनीतिस्था

610. दहराकाशरूपिणी

611. प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता

कलात्मिका कलानाथा काव्यालापविनोदिनी ।

सचामररमावाणीसव्यदक्षिणसेविता ॥ 123 ॥

612. कलात्मिका

613. कलानाथा

614. काव्यालापविनोदिनी

615. सचामररमावाणीसव्यदक्षिणसेविता

आदिशक्तिरमेयात्मा परमा पावनाकृतिः ।

अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ॥ 124 ॥

616. आदिशक्तिः

617. अमेयात्मा

618. परमा

619. पावनाकृतिः

620. अनेककोटिब्रह्माण्डजननी

621. दिव्यविग्रहा

क्लींकारी केवला गुह्या कैवल्यपददायिनी ।

त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ॥ 125 ॥

622. क्लींकारी
623. केवला
624. गुह्या
625. कैवल्यपददायिनी
626. त्रिपुरा
627. त्रिजगद्वन्द्या
628. त्रिमूर्तिः
629. त्रिदशेश्वरी

त्र्यक्षरी दिव्यगन्धाढ्या सिन्धूरतिलकाञ्चिता ।
उमा शैलेन्द्रतनया गौरी गन्धर्वसेविता ॥ 126 ॥

630. त्र्यक्षरी
631. दिव्यगन्धाढ्या
632. सिन्धूरतिलकाञ्चिता
633. उमा
634. शैलेन्द्रतनया
635. गौरी
636. गन्धर्वसेविता

विश्वगर्भा स्वर्णगर्भाऽवरदा वागधीश्वरी ।
ध्यानगम्याऽपरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥ 127 ॥

637. विश्वगर्भा
638. स्वर्णगर्भा
639. अवरदा
640. वागधीश्वरी
641. ध्यानगम्या
642. अपरिच्छेद्या
643. ज्ञानदा
644. ज्ञानविग्रहा

सर्ववेदान्तसंवेद्या सत्यानन्दस्वरूपिणी ।

लोपामुद्रार्चिता लीलाक्लृप्तब्रह्माण्डमण्डला ॥ 128 ॥

645. सर्ववेदान्तसंवेद्या

646. सत्यानन्दस्वरूपिणी

647. लोपामुद्रार्चिता

648. लीलाक्लृप्तब्रह्माण्डमण्डला

अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्जिता ।

योगिनी योगदा योग्या योगानन्दा युगन्धरा ॥ 129 ॥

649. अदृश्या

650. दृश्यरहिता

651. विज्ञात्री

652. वेद्यवर्जिता

653. योगिनी

654. योगदा

655. योग्या

656. योगानन्दा

657. युगन्धरा

इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी ।

सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ॥ 130 ॥

658. इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी

659. सर्वाधारा

660. सुप्रतिष्ठा

661. सदसद्रूपधारिणी

अष्टमूर्तिरजा जैत्री लोकयात्राविधायिनी ।

एकाकिनी भूमरूपा निर्द्वैता द्वैतवर्जिता ॥ 131 ॥

662. अष्टमूर्तिः

663. अजा

664. जैत्री

665. लोकयात्राविधायिनी

666. एकाकिनी
667. भूमरूपा
668. निर्द्वैता
669. द्वैतवर्जिता

अन्नदा वसुधा वृद्धा ब्रह्मात्मैक्यस्वरूपिणी ।
बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥ 132 ॥

670. अन्नदा
671. वसुधा
672. वृद्धा
673. ब्रह्मात्मैक्यस्वरूपिणी
674. बृहती
675. ब्राह्मणी
676. ब्राह्मी
677. ब्रह्मानन्दा
678. बलिप्रिया

भाषारूपा बृहत्सेना भावाभावविवर्जिता ।
सुखाराध्या शुभकरी शोभना सुलभागतिः ॥ 133 ॥

679. भाषारूपा
680. बृहत्सेना
681. भावाभावविवर्जिता
682. सुखाराध्या
683. शुभकरी
684. शोभना
685. सुलभागतिः

राजराजेश्वरी राज्यदायिनी राज्यवल्लभा ।
राजत्कृपा राजपीठनिवेशितनिजाश्रिता ॥ 134 ॥

686. राजराजेश्वरी
687. राज्यदायिनी

688. राज्यवल्लभा

689. राजत्कृपा

690. राजपीठनिवेशितनिजाश्रिता

राज्यलक्ष्मी कोशनाथा चतुरङ्गबलेश्वरी ।
साम्राज्यदायिनी सत्यसन्धा सागरमेखला ॥ 135 ॥

691. राज्यलक्ष्मी

692. कोशनाथा

693. चतुरङ्गबलेश्वरी

694. साम्राज्यदायिनी

695. सत्यसन्धा

696. सागरमेखला

दीक्षिता दैत्यशमनी सर्वलोकवशङ्करी ।
सर्वार्थधात्री सावित्री सच्चिदानन्दरूपिणी ॥ 136 ॥

697. दीक्षिता

698. दैत्यशमनी

699. सर्वलोकवशङ्करी

700. सर्वार्थधात्री

701. सावित्री

702. सच्चिदानन्दरूपिणी

देशकालापरिच्छिन्ना सर्वगा सर्वमोहिनी ।
सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥ 137 ॥

703. देशकालापरिच्छिन्ना

704. सर्वगा

705. सर्वमोहिनी

706. सरस्वती

707. शास्त्रमयी

708. गुहाम्बा

709. गुह्यरूपिणी

सर्वोपाधिविनिर्मुक्ता सदाशिवपतिव्रता ।

संप्रदायेश्वरी साध्वी गुरुमण्डलरूपिणी ॥ 138 ॥

710. सर्वोपाधिविनिर्मुक्ता

711. सदाशिवपतिव्रता

712. संप्रदायेश्वरी

713. साध्वी

714. गुरुमण्डलरूपिणी

कुलोत्तीर्णा भगाराध्या माया मधुमती मही ।

गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ॥ 139 ॥

715. कुलोत्तीर्णा

716. भगाराध्या

717. माया

718. मधुमती

719. मही

720. गणाम्बा

721. गुह्यकाराध्या

722. कोमलाङ्गी

723. गुरुप्रिया

स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी ।

सनकादिसमाराध्या शिवज्ञानप्रदायिनी ॥ 140 ॥

724. स्वतन्त्रा

725. सर्वतन्त्रेशी

726. दक्षिणामूर्तिरूपिणी

727. सनकादिसमाराध्या

728. शिवज्ञानप्रदायिनी

चित्कलाऽऽनन्दकलिका प्रेमरूपा प्रियङ्करी ।

नामपारायणप्रीता नन्दिविद्या नटेश्वरी ॥ 141 ॥

729. चित्कला

730. आनन्दकलिका

731. प्रेमरूपा

732. प्रियङ्करी

733. नामपारायणप्रीता

734. नन्दिविद्या

735. नटेश्वरी

मिथ्याजगदधिष्ठाना मुक्तिदा मुक्तिरूपिणी ।
लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता ॥ 142 ॥

736. मिथ्याजगदधिष्ठाना

737. मुक्तिदा

738. मुक्तिरूपिणी

739. लास्यप्रिया

740. लयकरी

741. लज्जा

742. रम्भादिवन्दिता

भवदावसुधावृष्टिः पापारण्यदवानला ।
दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ॥ 143 ॥

743. भवदावसुधावृष्टिः

744. पापारण्यदवानला

745. दौर्भाग्यतूलवातूला

746. जराध्वान्तरविप्रभा

भाग्याब्धिचन्द्रिका भक्तचित्तकेकिघनाघना ।
रोगपर्वतदम्भोलिः मृत्युदारुकुठारिका ॥ 144 ॥

747. भाग्याब्धिचन्द्रिका

748. भक्तचित्तकेकिघनाघना

749. रोगपर्वतदम्भोलिः

750. मृत्युदारुकुठारिका

महेश्वरी महाकाली महाग्रासा महाशना ।

अपर्णा चण्डिका चण्डमुण्डासुरनिषूदिनी ॥ 145 ॥

751. महेश्वरी
752. महाकाली
753. महाग्रासा
754. महाशना
755. अपर्णा
756. चण्डिका
757. चण्डमुण्डासुरनिषूदिनी

क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी ।

त्रिवर्गदात्री सुभगा त्र्यम्बिका त्रिगुणात्मिका ॥ 146 ॥

758. क्षराक्षरात्मिका
759. सर्वलोकेशी
760. विश्वधारिणी
761. त्रिवर्गदात्री
762. सुभगा
763. त्र्यम्बिका
764. त्रिगुणात्मिका

स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः ।

ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ॥ 147 ॥

765. स्वर्गापवर्गदा
766. शुद्धा
767. जपापुष्पनिभाकृतिः
768. ओजोवती
769. द्युतिधरा
770. यज्ञरूपा
771. प्रियव्रता

दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया ।

महती मेरुनिलया मन्दारकुसुमप्रिया ॥ 148 ॥

772. दुराराध्या
773. दुराधर्षा
774. पाटलीकुसुमप्रिया
775. महती
776. मेरुनिलया
777. मन्दारकुसुमप्रिया

वीराराध्या विराड्रूपा विरजाः विश्वतोमुखी ।

प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी ॥ 149 ॥

778. वीराराध्या
779. विराड्रूपा
780. विरजाः
781. विश्वतोमुखी
782. प्रत्यग्रूपा
783. पराकाशा
784. प्राणदा
785. प्राणरूपिणी

मार्ताण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः ।

त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ॥ 150 ॥

786. मार्ताण्डभैरवाराध्या
787. मन्त्रिणीन्यस्तराज्यधूः
788. त्रिपुरेशी
789. जयत्सेना
790. निस्त्रैगुण्या
791. परापरा

सत्यज्ञानानन्दरूपा सामरस्यपरायणा ।

कपर्दिनी कलामाला कामधुक्कामरूपिणी ॥ 151 ॥

792. सत्यज्ञानानन्दरूपा

793. सामरस्यपरायणा

794. कपर्दिनी

795. कलामाला

796. कामधुक्

797. कामरूपिणी

कलानिधिः काव्यकला रसज्ञा रसशेवधिः ।

पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥ 152 ॥

798. कलानिधिः

799. काव्यकला

800. रसज्ञा

801. रसशेवधिः

802. पुष्टा

803. पुरातना

804. पूज्या

805. पुष्करा

806. पुष्करेक्षणा

परञ्ज्योतिः परन्धाम परमाणुः परात्परा ।

पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ॥ 153 ॥

807. परञ्ज्योतिः

808. परन्धाम

809. परमाणुः

810. परात्परा

811. पाशहस्ता

812. पाशहन्त्री

813. परमन्त्रविभेदिनी

मूर्तामूर्ता नित्यतृप्ता मुनिमानसहंसिका ।

सत्यव्रता सत्यरूपा सर्वान्तर्यामिनी सती ॥ 154 ॥

814. मूर्तामूर्ता

815. नित्यतृप्ता
816. मुनिमानसहंसिका
817. सत्यव्रता
818. सत्यरूपा
819. सर्वान्तर्यामिनी
820. सती

ब्रह्माणी ब्रह्मा जननी बहुरूपा बुधार्चिता ।
प्रसवित्री प्रचण्डाज्ञा प्रतिष्ठा प्रकटाकृतिः ॥ 155 ॥

821. ब्रह्माणी
822. ब्रह्मजननी
823. बहुरूपा
824. बुधार्चिता
825. प्रसवित्री
826. प्रचण्डाज्ञा
827. प्रतिष्ठा
828. प्रकटाकृतिः

प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी ।
विशृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ॥ 156 ॥

829. प्राणेश्वरी
830. प्राणदात्री
831. पञ्चाशत्पीठरूपिणी
832. विशृङ्खला
833. विविक्तस्था
834. वीरमाता
835. वियत्प्रसूः

मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी ।
भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ॥ 157 ॥

836. मुकुन्दा

837. मुक्तिनिलया

838. मूलविग्रहरूपिणी

839. भावज्ञा

840. भवरोगघ्नी

841. भवचक्रप्रवर्तिनी

छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी ।

उदारकीर्तिः उद्दामवैभवा वर्णरूपिणी ॥ 158 ॥

842. छन्दःसारा

843. शास्त्रसारा

844. मंत्रसारा

845. तलोदरी

846. उदारकीर्तिः

847. उद्दामवैभवा

848. वर्णरूपिणी

जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी ।

सर्वोपनिषदुद्घुष्टा शान्त्यतीतकलात्मिका ॥ 159 ॥

849. जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी

850. सर्वोपनिषदुद्घुष्टा

851. शान्त्यतीतकलात्मिका

गम्भीरा गगनान्तस्था गर्विता गानलोलुपा ।

कल्पनारहिता काष्ठाऽकान्ता कान्तार्धविग्रहा ॥ 160 ॥

852. गम्भीरा

853. गगनान्तस्था

854. गर्विता

855. गानलोलुपा

856. कल्पनारहिता

857. काष्ठा

858. अकान्ता

859. कान्तार्धविग्रहा

कार्यकारणनिर्मुक्ता कामकेलितरङ्गिता ।

कनत्कनकताटङ्का लीलाविग्रहधारिणी ॥ 161 ॥

860. कार्यकारणनिर्मुक्ता

861. कामकेलितरङ्गिता

862. कनत्कनकताटङ्का

863. लीलाविग्रहधारिणी

अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्रप्रसादिनी ।

अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ॥ 162 ॥

864. अजा

865. क्षयविनिर्मुक्ता

866. मुग्धा

867. क्षिप्रप्रसादिनी

868. अन्तर्मुखसमाराध्या

869. बहिर्मुखसुदुर्लभा

त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी ।

निरामया निरालम्बा स्वात्मारामा सुधाकृतिः ॥ 163 ॥

870. त्रयी

871. त्रिवर्गनिलया

872. त्रिस्था

873. त्रिपुरमालिनी

874. निरामया

875. निरालम्बा

876. स्वात्मारामा

877. सुधाकृतिः

संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता ।

यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ॥ 164 ॥

878. संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता

879. यज्ञप्रिया

880. यज्ञकर्त्री

881. यजमानस्वरूपिणी

धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी ।

विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ॥ 165 ॥

882. धर्माधारा

883. धनाध्यक्षा

884. धनधान्यविवर्धिनी

885. विप्रप्रिया

886. विप्ररूपा

887. विश्वभ्रमणकारिणी

विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी ।

अयोनिर्योनिनिलया कूटस्था कुलरूपिणी ॥ 166 ॥

888. विश्वग्रासा

889. विद्रुमाभा

890. वैष्णवी

891. विष्णुरूपिणी

892. अयोनिः

893. योनिनिलया

894. कूटस्था

895. कुलरूपिणी

वीरगोष्ठिप्रिया वीरा नैष्कर्म्या नादरूपिणी ।

विज्ञानकलना कल्या विदग्धा बैंदवासना ॥ 167 ॥

896. वीरगोष्ठिप्रिया

897. वीरा

898. नैष्कर्म्या

899. नादरूपिणी

900. विज्ञानकलना

901. कल्या

902. विदग्धा

903. बैंदवासना

तत्त्वाधिका तत्त्वमयी तत्त्वमर्थस्वरूपिणी ।

सामगानप्रिया सौम्या सदाशिवकुटुम्बिनी ॥ 168 ॥

904. तत्त्वाधिका

905. तत्त्वमयी

906. तत्त्वमर्थस्वरूपिणी

907. सामगानप्रिया

908. सौम्या

909. सदाशिवकुटुम्बिनी

सव्यापसव्यमार्गस्था सर्वापद्विनिवारिणी ।

स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ॥ 169 ॥

910. सव्यापसव्यमार्गस्था

911. सर्वापद्विनिवारिणी

912. स्वस्था

913. स्वभावमधुरा

914. धीरा

915. धीरसमर्चिता

चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया ।

सदोदिता सदातुष्टा तरुणादित्यपाटला ॥ 170 ॥

916. चैतन्यार्घ्यसमाराध्या

917. चैतन्यकुसुमप्रिया

918. सदोदिता

919. सदातुष्टा

920. तरुणादित्यपाटला

दक्षिणादक्षिणाराध्या दरस्मेरमुखाम्बुजा ।
कौलिनी केवलाऽनर्घ्यकैवल्यपददायिनी ॥ 171 ॥

921. दक्षिणा
922. दक्षिणाराध्या
923. दरस्मेरमुखाम्बुजा
924. कौलिनी
925. केवला
926. अनर्घ्यकैवल्यपददायिनी

स्तोत्रप्रिया स्तुतिमती शृतिसंस्तुतवैभवा ।
मनस्विनी मानवती महेशी मङ्गलाकृतिः ॥ 172 ॥

927. स्तोत्रप्रिया
928. स्तुतिमती
929. शृतिसंस्तुतवैभवा
930. मनस्विनी
931. मानवती
932. महेशी
933. मङ्गलाकृतिः

विश्वमाता जगद्धात्री विशालाक्षी विरागिणी ।
प्रगल्भा परमोदारा परामोदा मनोमयी ॥ 173 ॥

934. विश्वमाता
935. जगद्धात्री
936. विशालाक्षी
937. विरागिणी
938. प्रगल्भा
939. परमोदारा
940. परामोदा
941. मनोमयी

व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी ।

पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चाधिशायिनी ॥ 174 ॥

942. व्योमकेशी
943. विमानस्था
944. वज्रिणी
945. वामकेश्वरी
946. पञ्चयज्ञप्रिया
947. पञ्चप्रेतमञ्चाधिशायि

पञ्चमी पञ्चभूतेशी पञ्चसङ्ख्योपचारिणी ।
शाश्वती शाश्वतैश्वर्या शर्मदा शम्भुमोहिनी ॥ 175 ॥

948. पञ्चमी
949. पञ्चभूतेशी
950. पञ्चसङ्ख्योपचारिणी
951. शाश्वती
952. शाश्वतैश्वर्या
953. शर्मदा
954. शम्भुमोहिनी

धरा धरसुता धन्या धर्मिणी धर्मवर्धिनी ।
लोकातीता गुणातीता सर्वातीता शमात्मिका ॥ 176 ॥

955. धरा
956. धरसुता
957. धन्या
958. धर्मिणी
959. धर्मवर्धिनी
960. लोकातीता
961. गुणातीता
962. सर्वातीता
963. शमात्मिका

बन्धूककुसुमप्रख्या बाला लीलाविनोदिनी ।

सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ॥ 177 ॥

964. बन्धूककुसुमप्रख्या
965. बाला
966. लीलाविनोदिनी
967. सुमङ्गली
968. सुखकरी
969. सुवेषाढ्या
970. सुवासिनी

सुवासिन्यर्चनप्रीता शोभना शुद्धमानसा ।
बिन्दुतर्पणसंतुष्टा पूर्वजा त्रिपुराम्बिका ॥ 178 ॥

971. सुवासिन्यर्चनप्रीता
972. शोभना
973. शुद्धमानसा
974. बिन्दुतर्पणसंतुष्टा
975. पूर्वजा
976. त्रिपुराम्बिका

दशमुद्रासमाराध्या त्रिपुराश्रीवशङ्करी ।
ज्ञानमुद्रा ज्ञानगम्या ज्ञानज्ञेयस्वरूपिणी ॥ 179 ॥

977. दशमुद्रासमाराध्या
978. त्रिपुराश्रीवशङ्करी
979. ज्ञानमुद्रा
980. ज्ञानगम्या
981. ज्ञानज्ञेयस्वरूपिणी

योनिमुद्रा त्रिखण्डेशी त्रिगुणाम्बा त्रिकोणगा ।
अनघाऽद्भुतचारित्रा वाञ्छितार्थप्रदायिनी ॥ 180 ॥

982. योनिमुद्रा
983. त्रिखण्डेशी
984. त्रिगुणाम्बा

985. त्रिकोणगा

986. अनघा

987. अद्भुतचारित्रा

988. वाञ्छितार्थप्रदायिनी

अभ्यासातिशयज्ञाता षडध्वातीतरूपिणी ।

अव्याजकरुणामूर्तिरज्ञानध्वान्तदीपिका ॥ 181 ॥

989. अभ्यासातिशयज्ञाता

990. षडध्वातीतरूपिणी

991. अव्याजकरुणामूर्तिः

992. अज्ञानध्वान्तदीपिका

आबालगोपविदिता सर्वानुल्लङ्घ्यशासना ।

श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी ॥ 182 ॥

993. आबालगोपविदिता

994. सर्वानुल्लङ्घ्यशासना

995. श्रीचक्रराजनिलया

996. श्रीमत्त्रिपुरसुन्दरी

श्रीशिवा शिवशक्त्यैक्यरूपिणी ललिताम्बिका ।

एवं श्रीललितादेव्या नाम्नां साहस्रकं जगुः ॥ 183 ॥

997. श्रीशिवा

998. शिवशक्त्यैक्यरूपिणी

999. ललिताम्बिका

॥ इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे श्रीहयग्रीवागस्त्यसंवादे श्रीललितासहस्रनामस्तोत्रकथनं संपूर्णम् ॥